# श्रीहरिहरात्मजाष्टकम्

{॥ श्रीहरिहरात्मजाष्टकम् ॥}

हरिवरासनं विश्वमोहनम्

हरिदटीश्वरम् आराध्यपादुकम् ।

अरिविमर्दनं नित्यनर्तनम्

हरिहरात्मजं देवमाश्रये ॥ १॥

चरणकीर्तनं भक्तमानसम्

भरणलोलुपं नर्तनालसम् ।

अरुणभासुरं भूतनायकम्

हरिहरात्मजं देवमाश्रये ॥ २॥

प्रणयसत्यकं प्राणनयकम्

प्रणतकल्पकं सुप्रभञ्चितम् ।

प्रणवमन्दिरं कीर्तनप्रियम्

हरिहरात्मजं देवमाश्रये ॥ ३॥

तुरगवहनं सुन्दराननम्

वरगदायुधं वेदवर्णितम् ।

गुरुकृपाकरं कीर्तनप्रियम्

हरिहरात्मजं देवमाश्रये ॥ ४॥

त्रिभुवनार्चितं देवतात्मकम्

त्रिनयनप्रभुं दिव्यदेशिकम् ।

त्रिदशपूजितं चिन्तितप्रदम्

हरिहरात्मजं देवमाश्रये ॥ ५॥

भवभयापहं भावुकावकम्

भुवनमोहनं भूतिभूषणम् ।

धवलवाहनं दिव्यवारणम्

हरिहरात्मजं देवमाश्रये ॥ ६॥

कलमृदुस्मितं सुन्दराननम्

कलभकोमलं गात्रमोहनम् ।

कलभकेसरीमाजिवाहनम्

हरिहरात्मजं देवमाश्रये ॥ ७॥

श्रितजनप्रियं चिन्तितप्रदम्

श्रुतिविभूषणं साधुजीवनम् ।

श्रुतिमनोहरं गीतलालसम्

हरिहरात्मजं देवमाश्रये ॥ ८॥

॥ इति श्री हरिहरात्मजाष्टकम् सम्पूर्णम् ॥

